वृष्णिषु श्रैष्ठ्येन तत् ॥ ५४ ॥

(गी०। अ०१०। श्लो०२१) आदित्यानामहं विष्णुरित्यादौ तेषु श्रेष्ठत्वं परमेश्वरस्यैवेति दृष्टिमात्रार्थं विभूतिकथनं तच्च वासुदेवेऽपि वृष्णिषु श्रेष्ठोऽयमित्येतावन्मात्रदृष्टिविधानार्थं विभूतिषु वासुदेवकीर्त्तनमिति ॥ ५४ ॥

एवं प्रसिद्धेषु च ॥ ५५ ॥

एवमनेन प्रकारेण वासुदेववद्ब्रह्मलिङ्गवत्तया प्रसिद्धेषु वराहनृसिंहवामनरामभद्रादिषु भक्तिरपि मुक्तिफलेति बोध्यम्। यद्वा एवं ब्रह्मलिङ्गवत्तया प्रसिद्धेषु (गी०। अ०१०। श्लो०२३) रुद्राणां शङ्करश्चास्मीत्यादिविभूत्यात्मसु श्रेष्ठ्यमात्रदृष्टिर्मन्तव्या। उक्तं हि स्कान्दे। काशीखं०। पूर्वभा०। अ०२७। श्लो०१८१)

विष्णुरुद्रान्तरं ब्रूयाद्यः श्रीगौर्य्यन्तरं तथा।

तद्भ्रान्तिकस्य मूर्खस्य वाक्यं शास्त्रविगर्हितम् ॥ इति।

शङ्करस्य ब्रह्मलिङ्गप्रसिद्धिः स्मृत्यादौ बहुलमुपलभ्यत इति ॥ ५५ ॥

इत्याचार्य्यस्वप्नेश्वरविद्वद्वरविरचिते शाण्डिल्यशतसूत्रीयभाष्ये द्वितीयाध्यायस्य प्रथममाह्निकम् ॥०॥

उक्तौ दृष्टोपकारकौ ज्ञानयोगौ सम्प्रति प्रतिबन्धकदुरितक्षयमुखेनापवर्गवत्यो गौणभक्तय उच्यन्ते।

भक्त्या भजनोपसंहाराद्गौण्या परायैतद्धेतुत्वात् ॥ ५६ ॥

(गी०। अ०८। श्लो०१३)

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्।

इत्यनेन सप्तमाध्यायप्रतिपादितपरभक्तिमनूद्य तत्पश्चाद्गीतं (गी०अ०९। श्लो०१४)

सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः।

नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते॥ १॥

इत्यादि। तत्पश्चात् (गी०अ०९। श्लो०२९)

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्। इति

तदुपसंहारस्ततश्च (तैत्तिरीयसं०।अष्ट०२।प्र०४।अनु०६) चित्रया यजेतेतिवत् सामानाधिकरण्येन भक्तिनाम्ना भजनेन फलं भावयेदित्यर्थः। (गी०। अ०७। श्लो०१७) एकभक्तिर्विशिष्यते इत्यादौ भगवदुक्तौ भक्तिशब्दस्य प्रयुक्तत्वेन संज्ञाप्राप्तेः भक्तिभजनयोरेकार्थत्वाच्च। साध्यच परभक्तिः फलभावनया विधीयते तस्या अकृतिसाध्यत्वेनाविधेयत्वात्। नचापि तस्या निःश्रेयसहेतुत्वमज्ञातं ज्ञाप्यते (गी०।अ०७। श्लो०२३) मद्भक्ता यान्ति मामपीत्यादिना सप्तम एव तज्ज्ञापनस्यापि [illegible]त्वात्। किन्तु परभक्तेर्विघ्ननाशनसाधनाकाङ्क्षया कीर्तनादिकर्मैतोपक्रान्तं भक्तिशब्देन गौण्या वृत्त्या तृतीयान्तेन निर्दिश्य परभजनसाधनत्वं तेषु विधीयते इत्यचार्थवादाकाङ्क्षायां (गी०।अ०९।श्लो०२९) मयि ते तेषु चाप्यहमिति पश्चादन्वयः। अन्यथा भक्त्या भजनं तेन च मयि स्थितिरिति वाक्यं भिद्येत। कीर्त्तनादिषु भक्तिसाधनत्वेन (तैत्तिरीयसं०।अष्ट०२। प्र०३। अनु०२) आयुर्वै घृतमितिवद्भक्तिशब्दो गौणः शक्य-

संस्कारेण सुयश इति। यद्वा भज्यते एभिरिति व्युत्पत्त्या तासु भक्तिशब्दः (आश्वलायनश्रौतसू०। अ०९।खं०८) उद्भिदवत्। अथवा (गी०।अ०७।श्लो०१६) चतुर्विधा भजन्ते मामिति भजनगणपाठात् स्थपतिवत्। (गी०।अ०७।श्लो०१८) उदाराः सर्व एवैते इत्यौदार्यगुणयोगाद्वा गौणत्वमिति ॥ ५६ ॥

## रागार्थप्रकीर्त्तिसाहचर्याच्चेतरेषाम् ॥ ५७ ॥

एवं हि श्रुतम् (गी०। अ०११। श्लो०३६)

स्थाने हृषीकेश तव प्रकीर्त्त्या

जगत् प्रहृष्यत्यनुरज्यते च। इति।

तच्च साक्षादेवानुरागार्थत्वं कीर्त्तनस्य श्रुतम्। तत्साहचर्यात् (गी०। अ०९। श्लो०१४)

सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः।

इत्यादिनोक्तानामपि तदेव फलमिति ॥ ५७ ॥

## अन्तराले तु शेषाः स्युरुपास्यादौ च काण्डत्वात् ॥ ५८ ॥

गी०। अ०९। श्लो०१३)

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्।

(गी०। अ०९। श्लो०२९)

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्।

इत्येतयोरन्तराले या गौणभक्तयः श्रुतास्ताः परभक्त्यङ्गानि भवन्ति परभक्तिसन्दंशादेवेति भावः। ता यथा (गीता०। अ०९। श्लो०१४।१५।२२।२५।२६।२७।२८)

सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १ ॥
ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ इति।

तथा।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ १ ॥ इति।

तथा।

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ १ ॥ इति।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ १ ॥ इति।

तथा।

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ १ ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः। इति।

तत्र नाम्नामभिधानं कीर्त्तनम्। भक्त्यर्थं यत्नश्चात्र लौकिकोऽप्यकृतप्रस्तावादुक्तः। दृढव्रतत्वं मद्यत्यागैकादश्युपवासाद्यनुष्ठानम्। नमस्कारः स्वापकर्षबोधककरशिरःसंयोगादिव्यापारः। ज्ञानयज्ञश्च द्विधा मुख्यामुख्यभेदेन एकत्वपृथक्त्वविषयतया। तस्याश्चिन्ता तु ध्यानमनुस्मृतिश्च। यागः पूजा भगवन्तमुद्दिश्य पत्रादिदानञ्च तथा विहितनिषिद्धसर्वकर्मणां

परमेश्वरे समर्पणमिति। न केवलमेतान्येवाङ्गानि। किन्तु (छां०।पृ०२२५) मनो ब्रह्मेत्युपासीत (गी०।अ०१०।श्लो०२१) आदित्यानामहं विष्णुरित्याद्युपासनादिसम्बन्धकवचोक्तान्यपि भक्तिसाधनानि कुतः ब्रह्मकाण्डस्य सर्वस्यापि भक्तितत्साधनप्रतिपादकत्वादिति ॥ ५८ ॥

ताभ्यः पावित्र्यमुपक्रमात् ॥ ५९ ॥

ताभ्यो गौणभक्तिभ्यः पावित्र्यमन्तःकरणमालिन्यहेतुदुरितक्षयः स एव द्वारं कुतः (गी०।अ०९।श्लो०२) पवित्रमिदमुत्तममित्युपक्रम्याभिधानात्। भक्तेरन्तःकरणधर्मत्वात् पावित्र्यस्यान्तरङ्गत्वादिति ॥ ५९ ॥

तासु प्रधानयोगात् फलाधिक्यमेके ॥ ६० ॥

तास्वेव कीर्त्तनादिषु (गी०।अ०९।श्लो०२६) यो मे भक्त्या प्रयच्छति (गी०।अ०९।श्लो०१४) नमस्यन्तश्च मां भक्त्या इत्यादौ प्रकरणादिसिद्धाङ्गभावेषु पुनर्भक्तिसंयोगकथनं प्रवृत्तभक्तीनां तदनुष्ठाने फलाधिक्यार्थमेवेत्येक आचार्या मन्यन्ते ॥ ६० ॥

नाम्नेति जैमिनिः सम्भवात् ॥ ६१ ॥

जैमिनिराचार्यस्तु तासु गौणत्वसिद्धेः (आश्वलायनश्रौत सू०।अ०८।खं०७) अनेनाभिचरन् यजेतेत्यादाविव भक्त्या कीर्त्तनेन भक्त्या दानेन परभक्तिं साधयेदिति सामानाधिकरण्यसम्भवानामभावेनान्यार्थं तां मन्यते न फलान्तरार्थं गौरवादिति ॥ ६१ ॥

अन्याङ्गप्रयोगाणां यथाकालसम्भवो गृहादिवत्॥ ६२॥

कीर्त्तनजपध्यानादीनां सहानुष्ठानमेकैकेन वा क्रमेण वानुष्ठानमिति त्रयः पक्षाः। तत्राद्ये कस्यचिदननुष्ठानेऽप्यन्येषां निःफलत्वप्रसङ्गः द्वितीये विकल्पप्राप्तावर्थैक्यनियमः स्यात्। तृतीयस्त्वशास्त्रार्थः। एककृतावन्यस्याननुष्ठानं च प्रसज्यते गौरवात्। तस्मादेतेषां मिथो व्यभिचारहेतुत्वमिति पूर्वपक्षः। सिद्धान्तस्तु सर्वाण्येव साधनानि प्रमाणसत्त्वात्। किन्तु सहानुष्ठाननियमो नास्ति प्रमाणाभावात्। येषान्तु गन्धपुष्पधूपदीपनैवेद्यादीनामेकप्रयोगश्रवणं तेषामेव सहानुष्ठानम्। तदितरेषान्तु यथाकालं यथासम्भवमनुष्ठानं गृहकृत्यादाविव यथा गृहसाधनतृणकाष्ठाद्याहरणं कदाचिदेकदा कदाचित् क्रमश इति नह्येतावता तृणादीनामकारणत्वमायाति। तस्मात् यद्यादृशदुरितक्षयसमर्थं तत् तादृशदुरितक्षयं कृत्वा सर्वैः स्वस्वसामर्थ्ये दर्शिते परभक्तिसिद्धिरिति तथाच गीयते (गी०।अ०७।श्लो०१९)।

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यत इति ॥ ६ ॥

ईश्वरतुष्टेरेकोऽपि बली॥ ६३॥

तेषु मध्ये यः कश्चिदतिश्रद्धानुष्ठानेन बलवान् भवति स एकोऽपि परमेश्वरतुष्टिं जनयित्वा परभक्तये प्रभवति बहुतरशिथिलपरिचर्याभिरपि यथा नेतरः प्रभुस्तुष्यति तुष्यति चैकेनापि निर्व्यलीकसततकृतपादसंवाहनेन तद्वत्। कीर्त्तनाद्यन्यतमेनापि दृढतरसेवितेन भगवत्प्रसादाद्भक्तिः प्राप्यते यथा (गी०।अ०१८।श्लो०५७)।

बुद्धियोगं समाश्रित्य मच्चित्तः सततं भव।

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात् तरिष्यसि॥ इत्यादि।

तथा कालादिकृतमपि कस्यचिद्बलम्। यथा (ब्रह्म पु०-अ०९७।श्लो०१६६)।

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।

यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्॥

इत्यादिकम्। नच व्यभिचारो बलवत्प्रत्येकजन्यभक्तिं प्रति कीर्त्तनत्वादिना हेतुत्वादिति॥ ६३॥

ननु कीर्त्तनाद्यात्मकानां सर्वेषामेव पावित्र्यं द्वारमुत केषाञ्चिदन्यदपीत्यत आह।

अबन्धोऽर्प्पणस्य मुखम्॥ ६४॥

भगवत्यर्पितशुभाशुभकर्मणां स्वफलाजननलक्षणबन्धाभाव एव द्वारम्। यथोक्तम् (गी०।अ०९।श्लो०२८)।

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैरिति।

अर्प्पणमन्त्रोऽपि पुराणान्तरे।

कामतोऽकामतो वापि यत् करोमि शुभाशुभम्।

तत् सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम्॥ इति।

नचैवं स्वातन्त्र्यप्रसङ्गः तत्करणबलेन पापाचरणाभावस्यापि तदङ्गत्वात्। यथा स्मृतिः। न वेदबलमाश्रित्य पापकर्मरतिर्भवेदिति। तस्मात् पावित्र्यं तदितरविषयमेवेति। अत्र शुभं कर्म स्वाश्रमविहितनित्यनैमित्तिकात्मकं बोध्यम्। सम्यगाम्र-मपरिपाकनाद्ब्रह्मलोकादिफलं तत्प्राप्तौ मुक्तये विलम्बः स्यादि-

त्यादिबन्धः। ब्रह्मार्पिते तु तत्प्रसिद्धिः। एवं कामाद्यागन्तकात्मकर्मपापयोरपि पश्चादर्पणे फलाभाव एव इति ॥ ६४ ॥

अथ गौणीष्वेव विशेषश्चिन्त्यते तत्र श्रुतिस्मृतिमध्ये यत्स्वरूपमुच्यते यथा (छां०।पृ०६०) य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश इत्यादि। तथा (नारदपञ्चरात्रे। पटले११। श्लो०७१)।

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती।
नारायणः सरसिजासनसन्निविष्टः॥
केयूरवान् मकरकुण्डलवान् किरीटी।
हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥ १॥

इत्येवमादि। तत्र किमेवंविधेष्वेव ध्याननियमः पूर्णप्रादुर्भावादौ वा यथाश्रुतेष्विति। तत्र ध्येयस्वरूपश्रवणान्नियमप्राप्तावुच्यते।

ध्याननियमस्तु दृष्टसौकर्यात् ॥ ६५ ॥

ध्याने ध्येयनियमकथनं दृष्टार्थं नानाविषयत्वे चित्तविक्षेपसम्भवात्। तस्मात् सौकर्यार्थमेव तत्कथनं ज्ञेयम्। अदृष्टार्थत्वे विकल्पादिप्रसङ्गात्। तस्माद्यथाश्रुतेषु व्यवस्था। अत एव गोपीनां शिशुपालादेश्च तन्नियमसन्तरेणैव ध्यानस्य दुर्लभं फलमुपलब्धमिति ॥ ६५ ॥

तद्यजिः पूजायामितरेषां नैवम् ॥ ६६ ॥

(गी०।अ०९।श्लो०२५) यान्ति मद्याजिनोऽपि मामित्यत्र यजिः किं प्रसिद्धज्योतिष्टोमादिविषयः किंवा पूजावचन इति।

तथायं यजिः पूजायामेव प्रयुक्तः कुतो ज्ञायते विष्णुं पूजयेदित्यादिना नित्यकाम्यपूजा तादर्थ्ये विहिता तस्याः परभक्त्यङ्गत्वमात्रञ्च विधीयते तेन तादर्थ्यम्। इतरथानयोर्न तु न तादर्थ्यं श्रुतं तेषामीश्वरोद्देश्यकत्वं भक्तिसंयोगश्चोभयं विधातव्यमिति वाक्यभेदः स्यात्। अथ विष्णवे उरुक्रमाय सुते यजमित्यादिविहितस्य भक्तिसंयोगोऽस्त्विति चेत् सत्यम्। काम्यानां तत्फलेनैव निराकाङ्क्षत्वात्। जीवनमात्रनिमित्तकनित्यपूजायास्तु भक्तिसंयोगविधौ बाधकाभावात् नित्यत्वे सततोपस्थितिलाघवाच्चेति। अत एव मोक्षधर्मे हिंसायुक्तधर्मनिन्दायाम्। (महाभार०।शां०।अ०२६५।पृ०६६८।श्लो०९४७०)।

सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत्।
कामरागाद्धि हिंसन्ति बहिर्वेद्यां पशून् नराः॥
विष्णुं ये चाभिजानन्ति धर्मादेव यजन्ति ते।
पायसैः सुमनोभिश्च तथापि यजनं स्मृतम्॥६६॥ इति।

अथ पूजाप्रस्तावादधिकरणत्रयम्।

पादोदकं तु पाद्यमव्याप्तेः॥ ६७॥

एवं स्मर्यते। (नृसिंह पु०।अ०५८।श्लो०४६)

गङ्गाप्रयागगयपुष्करनैमिषाणि।
पुण्यानि यानि कुरुजाङ्गलयामुनानि॥
कालेन तीर्थसलिलानि पुनन्ति पापान्।
पादोदकं भगवतः प्रपुनाति सद्यः॥ १॥

इत्यत्र तत् किं पादसंयुक्तं जलं पादोदकमुत पादे दत्तको-

स्पृष्टं जलम् । तच पाद्यमेव पादोदकं कुतो ज्ञायते सम्बन्धाऽव्याप्तिप्रसङ्गात् । तथाहि भगवतः साक्षात्पादसम्बन्धो न सम्भवति । नाप्यवतारद्वारा । तस्याप्यनुष्ठानसन्निधानाभावात् । किन्तु पूजाधिष्ठानप्रतिमापादसम्बन्धादुपचारस्तत्रापि प्रतिष्ठितायाः अप्रतिष्ठितायास्तु पूजार्थमावाहने सति तथाच शालिग्रामशिलाद्यधिष्ठाने पादाभावे तन्न स्यात् । तत्रैवं व्याप्त्यनुरोधात् पाद्यमेवास्तु प्रतिमाद्यत्यन्तव्यवहितसम्बन्धकल्पनाप्रसङ्गात् ॥ ६७ ॥

स्वयमर्पितं ग्राह्यमविशेषात् ॥ ६८ ॥

पूजायां भगवते दत्तनैवेद्यनिर्माल्यादिकं वैष्णवं सात्वतेभ्य इत्यादिना प्रतिपाद्यत्वेन विहितं तदिह सात्वतत्वाविशेषादेव भगवद्भक्तेन स्वयमपि ग्राह्यं भोजनधारणादिना स्वोपकार्यमित्यर्थः । स्वयमपि ग्रहणे प्रतिपत्तिः सिद्ध्यति । धर्मग्राह्यन्तु वर्जनीयमेव यथा अन्वाहार्यदेशेन त्यक्तपुरोडाशस्य । उत्तरार्द्धात् स्विष्टकृतमवद्यति यजमानपञ्चमाः पुरोडाशं च-यन्तीति प्रतिपत्तिस्तथेदमपि वचनादेव । अन्यथा सात्वतेभ्योऽपि न प्रतिपादयेत् परद्रव्यत्वात् । वचनादिति चेन्न नहि वचने स्ववर्जनमुक्तम् । अथ ब्राह्मणेभ्यो दद्यादित्यादिना ब्राह्मणत्वादात्मनेऽपि दानप्रसङ्गादिति चेन्न दानस्य स्वस्वत्वध्वंसेन परस्वत्वापादानरूपत्वात् । नचैवं प्रतिपत्तौ युक्तं पुरोडाशस्यापि यजमाने प्रतिपत्तिदर्शनात् क्रयादिवत् प्रतिपत्तिरपि स्वत्वापादिकैव । तदेवं यथान्यसात्वताऽसंपत्तिस्तत्र स्वयं ग्रहणे-

नाप्यवैगुण्यं परिहार्यमेव। तथा स्वयं दत्तकादिहारेऽपि श्रेयमिति। किञ्च (गी०।अ०३।श्लो०१२) तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव स इत्यत्र समानकर्तृकत्वात् ल्यबर्थे समानकर्मत्वप्रतीतेः। क्त्वासमभिव्याहृतनञः सामानाधिकरण्येनान्वयात् तैर्दत्तानित्यत्र तज्जातीयपरत्वे मानाभावात्। तस्माद्बाधकं विना देवेभ्यो दत्तमपि भोक्तव्यमिति ध्येयम्॥ ६८॥

निमित्तगुणाव्यपेक्षणादपराधेषु व्यवस्था॥ ६९॥

(वराहपुराणे। अ०१२४श्लो०४) देवपूजापराधास्ते द्वात्रिंशत् परिकीर्त्तिताः। इत्युपक्रम्य द्वात्रिंशापराधास्तत्प्रायश्चित्तानि च विहितानि तत्र किं सर्वापराधवर्जनं पूजाङ्गमुत केषांचिद्वर्जनमङ्गं केषांचित् पुरुषार्थ इति। अत्रोच्यते (वराहपु०।अ०१२४।श्लो०१५)

अकर्मण्येन पुष्पेण यो मामर्चयते नरः।
पतनं तस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे॥ १॥ इत्यादि।

तत्राकर्मण्यानां पुष्पाणां पर्युदस्तत्वान्न पूजाङ्गत्वम्। किन्तु पूजाक्रमप्रयोगमध्ये भ्रमादिनार्पणे कृते तन्निमित्तमपेक्ष्य प्रायश्चित्तम्। यत्र तु (वराहपु०अ०१२५।श्लो०२६) अदत्त्वा गन्धमाल्यानि धूपं यो मे प्रयच्छतीत्यनेन पूजाक्रमभङ्गापराधे तत्तत्क्रमस्य पूजाङ्गत्वादङ्गवैगुण्यपरिहारात् तत्प्रायश्चित्तस्याङ्गत्वं द्रष्टव्यम्। यत्र पूजामन्तरेण (वराहपु०।अ०१२५।श्लो०१) दन्तकाष्ठमखादित्वा यस्तु मामुपसर्पतीत्यादि श्रुतं तत्र व्यक्तमेव पुरुषार्थत्वमिति व्यवस्थैवेति॥ ६९॥

इदं पूजाया भक्तियोगविद्धौ (गी० अ० ९। श्लो० २६) पत्रं पुष्पं फलं तोयमित्यनेन भगवदुद्देश्यकदानमात्रस्य भक्त्यङ्गत्वविधिरित्याह।

पत्रादेर्दानमन्यथा हि वैशिष्ट्यम् ॥ ७० ॥

यद्यदिष्टतमं लोके यच्चात्मदयितं गृहे।
तत्तद्धि देयं प्रीत्यर्थं देवदेवाय चक्रिणे ॥

इत्यादिना प्राप्तस्य भगवदुद्देश्यकसर्वदानस्य भक्त्यङ्गत्वविधिः। अन्यथा पत्रादिचतुष्टयविशिष्टदानमेव स्यात्। प्रत्येकविधौ वाक्यभेदः। तस्मात् पत्रादिशब्देन प्राप्तं दानमनूद्य (तैत्तिरीय सं०) उपव्ययते इत्यनेन नित्योपवीतस्य दर्शाङ्गत्ववदङ्गत्वविधिरेव युक्त इति ॥ ७० ॥

सुकृतजत्वात् परहेतुभावाच्च क्रियासु श्रेयस्यः ॥ ७१ ॥

ता भक्तयः सर्वकर्मसु श्रेयस्य एव कुतः परभक्तिहेतुत्वात् इतरधर्मजन्यत्वाच्च यथा (गी० अ० ४। श्लो० १०।११)

बहवो ज्ञानतपसा पूता मद्भावमागताः।
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥ इति।

भावशब्दश्च भक्तौ प्रयुक्तः।

गङ्गाजले किं न वसन्ति मत्स्याः।
देवालये पक्षिगणा वसन्ति ॥
भावोज्झितास्ते न फलं लभन्ते।
तीर्थाच्च देवायतनाच्च मुख्यात् ॥ इत्यादौ।

तथा (गी० अ० ७। श्लो० १६)

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ॥ इति।

अथ पूर्वसूत्रकथनात्क्रमेणानां तासेभ्यो मुख्याः।

एतेन भक्तिमीमांसायां विचारो युज्यते न कर्ममीमांसामित्युक्तम् ॥ ७१ ॥

ननु भक्तानां न गौणमुख्यभावस्तथा सति (गी०।अ०७।श्लो।१६)

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।

आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ इति।

चतुर्णां तुल्यवदभिधानं किं कृतमित्यत आह।

गौणं त्रैविध्यमितरेण स्तुत्यर्थत्वात् साहचर्य्यम् ॥ ७२ ॥

गौणं त्रैविध्यमेव तासां मुख्येन साहचर्य्यश्रवणं तु स्तुत्यर्थं। यथा राजगमनभिव्याहारेणामात्यानाम्। एवञ्च पापप्रविपद्दुःखादिनिमित्तं स्मरणकीर्त्तनाद्यार्त्तभक्तिः ज्ञानार्थं ज्ञाचारणं जिज्ञासोर्भक्तिः। यथाह (वृहदा०४०८९) तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेत्यादि। तथा (गी०।अ०१८।श्लो०४८)

स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दन्ति मानवाः। विष्णुपु०।अं०३।अ०७।श्लो०१६)

न चलति निजवर्णधर्मतो यः।

सममतिरात्मसुहृद्विपक्षपक्षे ॥

न हरति न च हन्ति किञ्चिदुच्चैः*।

स्थितमनसं तमवेहि विष्णुभक्तम् ॥

---

* स्थितमनसमिति द ठा०पाठः।

इत्यनेन स्वस्ववर्णाश्रमविहितवेदानुवचनादीनां ज्ञानार्थमनुष्ठानं जिज्ञासा भक्तिः। अर्थार्थिता भक्तिरपि द्विधा तत्रैका परभक्त्यर्थं क्रियमाणा पूर्वोक्ता राज्यस्वर्गाद्यर्थं क्रियमाणा च कीर्त्तनादिरूपाऽपरा। यथा (विष्णुपु०।अं०३।अ०७।श्लो०३)

भौमान् मनोरथान् कामान् स्वर्गिवन्द्यं परं पदम्।
प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम्॥ इति।

तत्र निर्वाणप्राप्तिः परभक्तिद्वारेति परभक्तिप्रयोजनार्थिता (गी०।अ०९।श्लो०१९) ये भजन्ति च मां भक्त्या मयि ते तेषु चाप्यहमित्यनेन सहैकवाक्यत्वात्। यच्च भागवते (स्कन्ध७।अ०५।श्लो०२२।२३)

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा। इति।

तदेतेष्वेव यथायथमन्तर्भावनीयम्। तदेवमुपाधीनामेषामुपधेयसाम्येऽपि न दोष इति॥ ७२॥

ननु कीर्त्तनादीनामङ्गत्वे कथमार्त्यादिषु प्राधान्यं घटते इत्यपेक्षायामुच्यते।

## बाह्यान्तरस्थमुभयमवेष्टिसववत्॥ ७३॥

स्मरणकीर्त्तनादीनां परभक्त्यङ्गतया तदन्तर्गतत्वमनारभ्य फलान्तरश्रवणात् तद्बहिर्भावेनोत्कर्षोऽपि। यथा राजसूयान्तर्गतावेष्टिः प्रधानापि च्यनारभ्य फलान्तरसम्बन्धात् तत

उत्कृष्यते। यथावा बृहस्पतिसवः कश्चित् प्रधानमपि वाजपे-याङ्गं तद्वत् प्रमाणसत्त्वासत्त्वाभ्यां विशेषात्। एवं

प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥

इत्यनेन सर्वकर्मणां नैमित्तिकाङ्गत्वेनापि प्रवृत्तेः। स्वभा-वाङ्गत्वं स्वर्गादिफलाय प्राधान्यं च न विरुद्धमिति॥ ७३॥

इदानीमार्त्तभक्तौ विशेषश्चिन्त्यते।

**स्मृतिकीर्त्त्योः कथादेश्चार्त्तौ प्रायश्चित्तभावात्॥ ७४॥**

स्मरणकीर्त्तनकथानमस्कारादीनामार्त्तभक्तौ निवेशस्तत्त-त्पापकृतनरकार्त्तिमतां तत्तत्पापक्षयहेतुत्वेन कथनात् यथा (विष्णुपु०।अं०२।अ०६।श्लो०३२।३३)

पापे गुरूणि गुरुणि लघूनि च लघुन्यपि।
प्रायश्चित्तानि मैत्रेय जगुः स्वायंभुवादयः॥ १॥
प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम्॥ २॥

तथा (विष्णुपु०।अं०६।अ०७।श्लो०८)

यन्नामकीर्त्तनं भक्त्या विलायनमनुत्तमम्।
मैत्रेयाशेषपापानां धातूनामिव पावकः॥

एवं (महाभार०।शां०।मोक्ष०।अ०३४५।श्लो०१३२०५।१३२०६)

सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम्।
न तथा फलदं पौते नारायणकथा यथा॥

श्राविताप्ताः स्म संहृष्टाः श्रुत्वेमामादितः कथाम्।

नारायणकथां पुण्यां सर्वपापप्रणाशिनीम्॥ इत्यादि।

तस्मादुक्तमार्गो निवेशनमिति॥ ७४॥

**भूयसामननुष्ठितिरिति चेदाप्रयाणमुपसंहारान्महत्स्वपि॥ ७५॥**

स्यादेतत्। न्यायविरोधादेतद्वचनानां स्वल्पपापविषयत्वमेव युक्तम्। अन्यथा भूयः क्लेशसाध्यानामननुष्ठानलक्षणमप्रामाण्यमिति चेन्न तेषामामरणमुपसंहारस्मरणात् क्लेशाधिक्यात्। यथा (विष्णुपु०।अं०२।अ०६।श्लो०२८)

तस्मादहर्निशं विष्णुं संस्मरन् पुरुषो मुने।

न याति नरकं शुद्धः संक्षीणाखिलकल्मषः॥

इत्यनेन सातत्योपसंहारात्। उपक्रमोपसंहारयोरेकार्थत्वादिति भावः। नचोपक्रमे कालः श्रूयते येन तद्विरोधादुपसंहारस्य भिन्नार्थतापि भवेत्। तथाच क्लेशसाम्यादितरेषां नाननुष्ठानमप्रामाण्यम् (विष्णुपु०।अं०२।अ०६।श्लो०३५) प्रातर्निशि तथा सन्ध्यामध्याह्नादिषु संस्मरन् इत्येतदवरस्यानुवाद एव। नाप्यनुतप्ताधिकारिकमिदम्। (विष्णुपु०।अं०२।अ०६।श्लो०३४)

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते।

प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम्॥

इत्यस्यापि सर्वप्रायश्चित्ताङ्गानुतापस्यानुवादत्वादेकमित्यस्यापि प्रायश्चित्तान्तरनैरपेक्ष्यस्य न्यायप्राप्तस्यानुवादः। अन्यथा वाक्यानि भिद्येरन् विशिष्टविषयाश्च भवेयुः। अतो यच्छब्दान्त-

गंतत्वाद्यथायथमनुवादत्वादार्थवादत्वं पूर्ववाक्यानाम्। अत एवान्यत्रापि (विष्णुपु०।अं० ३।अ० ७।श्लो० ३३।३४)

किङ्करा दण्डपाशौ वा न यमो न च यातनाः।
समर्थास्तस्य यस्यात्मा केशवालम्बनः सदा॥
चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत्।
नाशौचं विद्यते तस्य स पवित्रकरो यतः॥

इत्यादिभिः सातत्यमुक्तमिति॥ ७५॥

लघ्वपि भक्ताधिकारे महत्क्षेपकमपरसर्वहानात्॥ ७६॥

लघ्वपि सकृत्स्मरणकीर्त्तनादि महतामपि पापानां क्षेपकं नाशकं भवति। यतो भक्ताधिकारे प्रायश्चित्तान्तराणां सर्वेषां त्यागलक्षणहानिप्रतीतेरित्यर्थः। यथा गीतम् (गी०। अ०१८।श्लो० ६६)

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ इति।

अत्र हि न काम्यकर्मत्यागपूर्वकत्वमर्थः काम्यत्यागे पापाभावात् किं भगवता मोक्षणीयम्। अथ पापान्तरं नाश्यं काम्यत्यागस्यादृष्टार्थत्वापत्तेः नित्यनैमित्तिकयोरपि त्यागपूर्वकता न तस्यार्थः तदोस्त्यागे यदि विधिरस्ति न ततः पापं किं मोक्षणीयम्। अथ नास्तीति वाच्यम्। नैवम्। एवं वाक्येनैव तद्विधानात् पापाजनकत्वात्। अथ सर्वधर्मान् परित्यज्येत्यनेन संन्यासिनमनूद्य तदधिकारिकमिदं तेषामवकीर्णादिप्रायश्चि-

न्नादिस्मरणात् तैः अत्र विकल्पप्रसङ्गात् पूर्ववत्स्वकृतानामननुष्ठानं च स्यात्। अत्र तात्पर्येण तद्दोषपरिहारः।

महापातकयुक्तोऽपि ध्यायन्निमिषमच्युतम्।
पुनस्तपस्वी भवति पङ्क्तिपावनपावनः॥

इत्यादिना लघुनोऽपि महत्त्वेपकत्वात्। किञ्च संन्यासाश्रमस्यासन्निधानेन बुद्ध्यनारोहात्। तस्माद्यथा लोके सर्वान् विहाय मां भज क्लेशांस्ते नाशयिष्यामीत्युक्ते क्लेशनाशकान्तरहानिः प्रतीयते। तथान्तरपापनाशकान्तरत्यागोऽवगम्यते वाक्यादेव। एतेन कथंचित्संन्यासविधायकेन सहैकाध्यायपाठेऽपि न तद्विषयकत्वं प्रकरणसन्निधानयोः सबलत्वात्। किञ्चास्मिन्नध्याये। (गी०।अ०१८।श्लो०२) काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुरित्यादिना काम्यकर्मत्याग एवोक्तो न संन्यासाश्रमः एवञ्च प्रायश्चित्तान्तरत्यागसङ्कल्पेन केवलभगवन्नामादिभिरार्त्तिं यस्तर्त्तुमिच्छति तदधिकारिकमेव सकृत्स्मरणादि। तथाच भिन्नाधिकाराद्दूषणानां न समुचितिः। नापि क्लेशभ[illegible]द्भयसामननुष्ठानम्। (गी० अ०१८।श्लो०८)

दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥

इत्यनेन तादृशसंन्यासस्य हेयत्वात्। (विष्णुपु०।अं०६।अ०७।श्लो०१०)

कलिकल्मषमत्युग्रं नरकार्त्तिप्रदं नृणाम्।
प्रयाति विलयं सद्यः सकृद्यत्रानुसंस्मृते॥ इत्यादि।

तदधिकारपरम्। एवम् (गी०।अ०९।श्लो०३०।३१)

अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति॥

इत्यनेन तथा (नृसिंहपु०।अ०८।श्लो०२८।२९)

नारकाः कृष्णकृष्णेति नारसिंहेति चुक्रुशुः।
इति संकीर्त्तितो विष्णुर्नारकैर्भक्तिपूर्वकम्।
नारकेभ्यो यातनाः सर्वास्तेषां नष्टा महात्मनाम्॥

इत्यादिना च भक्त्यधिकारः सुव्यक्त इति। अत्र कीर्त्तनस्योच्चारणत्वमात्रमिह प्रतीतम्। न तु प्रथमान्तपदेनेत्यादिनियम इति॥ ७६ ॥

## तत्स्थानत्वादनन्यधर्मः खले वालीवत्॥ ७७॥

(विष्णुपु०अं०२।अ०६।श्लो०३४) प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परमित्यादौ नामाऽतिदेशेन प्रायश्चित्तान्तरधर्मस्तु न मन्तव्यः। प्रायश्चित्तस्थानत्वात् तत्स्थाने तद्विधानादित्यर्थः। यथा (आश्वलायनश्रौतसू०।अ०९।खं०७) खले वाली यूपो भवतीत्यत्र पशुनियोजने यूपकार्ये खले वालीविधिरिति। न यूपधर्मस्याष्टाश्रिकरणादेः प्रसक्तस्तद्वच्च नवलोमादिवपनानां प्रायश्चित्तधर्माणामप्राप्तिरिति। न कीर्तनादेरपि पापक्षयहेतुत्वात् प्रायश्चित्तमेवेति वाच्यम्।

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।
तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्॥

इत्यनेन तपोरूपे प्रायश्चित्तशब्दो मुख्यः अन्यत्र गौण इति ध्येयम्॥ ७७॥

अथाङ्गानां प्रधानाधिकरणनैयत्यात् तदधिकारश्चिन्त्यते।

**आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवत्॥ ७८॥**

निन्दितचाण्डालादियोनिपर्यन्तं भक्तावधिक्रियते संसारदुःखजिहासाया अविशेषात्। अथ वेदाध्ययनानधिकारात् कथमत्रैवर्णिकानां स इतिचेत् तत्राह पारम्पर्यादिति। (पूर्वमीमांसासू०।अ०१।पा०१।सू०२) चोदनालक्षणोऽर्थो धर्मः (उत्तरमीमांसासू०।अ०१।पा०१।सू०३) शास्त्रयोनित्वादितिन्यायादलौकिकोऽर्थः श्रुत्येकसमधिगम्य इत्यत्र न प्रतिपद्यामहे। किन्तु स्त्रीशूद्रादीनामितिहासपुराणादिद्वारा चाण्डालादीनां च सत्याचारवदुपदेशपारम्पर्येण ज्ञानमपि श्रुतिमूलमेव भवति। यथा तेषां सामान्याऽहिंसाधर्मादिज्ञानम्। अन्यथा तदसिद्धिप्रसङ्गादिति॥ ७८॥

**अतो ह्यविपक्वभावानामपि तल्लोके॥ ७९॥**

यतः सर्वाधिकारोऽतः खलु येषामत्र परभक्तिर्विपक्वभावं न गता तेषां श्वेतद्वीपे भगवल्लोके परभक्तिसाधनानुष्ठानं स्मर्यते। यथा (महाभार०।शां०।मोक्षधर्मे। नारायणीये। अ०३३८।श्लो० १२७७८॥१२७७९)

क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभः।
तत्र नारायणपरा मानवाश्चन्द्रवर्चसः॥
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमे।

इत्याद्युपक्रम्य तेषां परमभक्तिसाधनानुष्ठानं श्रुतम्। (महाभार०।शां०।मोक्षधर्मे।अ०३३८।श्लो०१२७८९।१२७९१)

अर्चितास्त्वाभ्यधावन्त यतस्ते मानसा हुताः।
कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः॥
ततो विवदतां तेषामश्रौषं विपुलं ध्वनिम्।
बलिः किलोपक्रियते तस्य देवस्य तैर्नरैः॥

इत्यादि। तस्मात् सर्वत्र तदधिकार इति। अत एव (उत्तरमीमांसासू०।अ०१।पा०३।सू२६) तदुपर्यपि बादरायणः सम्भवादिति सूचितम्॥ ७९॥

अथ विपक्वभावानामपि कथं न तल्लोक इत्युपोद्घातेनोच्यते।

## क्रमैकगत्युपपत्तेस्तु॥ ८०॥

तुशब्दागतप्रश्नव्यवच्छेदार्थः। नारायणीय एव श्रूयते (महाभार०।शां०।अ०३४६।श्लो०१३२८२) येऽतिनिष्कलुषा लोके पुण्यपापविवर्जिता इत्युपक्रम्य आदित्यमण्डलद्वारा अनिरुद्धप्रद्युम्नसंकर्षणव्यूहक्रमेण गतिमभिधायाभिहितम्। (महाभार०।शां०।अ०३४६।श्लो०१३२८३।१३२८९)।

समाहितमनस्काश्च नियताः संयतेन्द्रियाः।
एकान्तभावोपगता वासुदेवं विशन्ति ते॥ इति

क्रमगत्यभिधानम्। तथा च व्यासादुक्तम्। (महाभार०।शां०।-मोक्षधर्मे।अ०३४०।श्लो०२२४८।२२४९।२२५०)।

ये तु दग्धेन्धना लोके पुण्यपापविवर्जिताः।
तेषां त्वयाभिनिर्दिष्टा पारंपर्यक्रमाद्गतिः॥
चतुर्थ्यां चैव ते गत्यां गच्छन्ति परमं पदम्।
नूनमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः॥
अगत्वा गतयस्तिस्रो यद्गच्छन्त्यव्ययं हरिम्।

इत्येकगत्यभिधानं च पक्वभक्तिविषयत्वेनोपपद्यते। अन्यथा विरोधात् तस्मादपक्वविषयत्वम्लोकलाभ इति ॥ ८० ॥

उत्क्रान्तिस्मृतिवाक्यशेषाच्च ॥ ८१ ॥

उत्क्रान्तौ (गी०।अ०८।श्लो०१०) भक्त्या युक्तो योगबलेन चैवेत्युपक्रम्य (गी०।अ०८।श्लो०१३)।

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥

इत्युक्तम्। तत्र वाक्यशेषः। (गी०।अ०८।श्लो०२४)।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥ इति

क्रमाद्गतिः श्रुता। तथा। (गी०।अ०८।श्लो०१६)।

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥

इतिवाक्यशेषे लोकोपक्रमादुपलब्धमचिरा च तस्योपलो-

कर्मान्तरविपक्वानामेव युक्तं विपक्वाशयत्वं च तल्लोकग-
मनमपि फलं युज्यते तत्फलभोक्तृत्वात् तत्रापि चाभ्यासानु-
ष्ठानसम्भवाच्च। किञ्च अविपक्वकर्मणामेव कर्ममुक्तिसिद्धौ
तत्कालीनस्मरणविधिवैयर्थ्यप्रसङ्गात्। अत एव तेन परभक्तिसमु-
च्चयो घटते। (गी०।अ०८।श्लो०२२) पुरुषः स परः पार्थ
भक्त्या लभ्यस्त्वनन्ययेत्यन्यनिरपेक्षमोक्षसाधनत्वावगतेः। तस्मात्
तल्लोकेऽप्यधिकारः। भारतभूमेस्तु (विष्णुपु०।अं०२।अ०३।
श्लो०५)।

न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते।

इत्यनेन कर्मोत्पत्तिहेतुतैव। भक्तिस्तु न कर्मात्मिकेत्युक्तं
प्राक् तदङ्गानामप्राप्तिः स्यादिति चेन्न प्रधानप्राप्तावेवाङ्गप्रा-
प्तेर्निषादस्थपतियागाङ्गवदिति। शूद्रादीनां तु वैदिकमन्त्र-
जकर्मनिवृत्तिस्तत्तु स्मरणकीर्तनादेर्भक्तिसाधनत्वेऽपि तावतैवा-
धिकारसिद्धौ न विद्याप्रवृत्तिकल्पना युक्ता॥ ८१॥

अस्तु तर्हि महापातकिनामपि परभक्तावेवाधिकार-
स्तथा तदङ्गाङ्गवेदानुवचनादावपीत्यत आह।

महापातकिनां त्वार्तौ॥ ८२॥

पतनहेतुपापरतानां च पुनरार्त्तिभक्तावेवाधिकारः प्रा-
यश्चित्तवत्त्वाच्च तत्पापक्षयस्य सर्वापेक्षयाऽभ्यर्हितत्वात् भुञ्जानो
वर्द्धयेत् पापमित्यादिना। तदपगमे तु मुख्यामधिकारसि-
द्धिः॥ ८२॥

अथैकान्तिकप्रस्तावात् सर्वधर्मः किं परभक्तितो भिन्न इति प्रसङ्गापितामाशङ्कामपाकरोति ।

सैकान्तभावो गीतार्थप्रत्यभिज्ञानात् ॥ ८३ ॥

सा परा भक्तिरेवैकान्तभावो नान्यः कुतः गीतार्थेन प्रत्यभिज्ञायमानात्। यथा नारायणीय एव (महाभार०।शां०। मोक्ष०।अ०३५०।श्लो०१३५५१।५२।५४)

समोपनिषदो वेदान् ये विप्राः सम्यगास्थिताः ।
पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः ॥
ततो विशिष्टां जानामि गतिमेकान्तिनां नृणाम् ।
केनैष धर्मः कथितो देवेन ऋषिणाथवा ॥

इति प्रश्ने प्रत्युत्तरम् ।

समुपोढेष्वनीकेषु कुरुपाण्डवसेनयोः ।
अर्जुने विमनस्के वै गीता भगवता स्वयम् ॥ इति ।

तस्मादेकान्तिता परभक्तिरिति ॥ ८३ ॥

अथ मोक्षोऽपि साक्षान्मुक्तिं जनयतु को दोषस्तत्राह ।

परां कृत्वैव सर्वेषां तथाह्याह ॥ ८४ ॥

परां भक्तिं कृत्वैव सर्वेषां मुक्तावुपयोगः। तथाहि सहेतुकं भगवानाह (गी०।अ०१८।श्लो०६८।

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयम् ॥ इति ।

तचैतद्धर्मस्योपदेशफलमपि भक्तिभावापत्तिरित्येवार्थसिद्धेः

भक्तिं मयि परां कृत्वेति किमर्थमाह। तस्या मोक्षसाधनत्वेन श्रुतत्वात्। अत एवोपरिचरवसोः (महाभार०।शां०।अ०३३०। श्लो०१२७१८) आत्मराज्यं धनं चेत्यादिना परमेश्वरानुरक्तिरूपाया भक्तेर्लिङ्गं प्रदर्शितमिति स्वतः प्रयोजनत्वाभावात्। तस्मात् सर्वेषां मुक्तिहेतुत्वेन श्रुतानां परभक्तिजनकत्वेन मुक्तावुपयोग इत्यभिप्राय उन्नीयत इति। न चोभयजनकत्वं तस्य कर्मत्वेन मोक्षाजनकत्वात्। एवञ्च दृष्टार्थता भवति वाक्यस्येति॥ ८४॥

इत्याचार्यस्वप्नेश्वरविरचिते शाण्डिल्यशतसूत्रीये भाष्ये द्वितीयाध्यायस्य द्वितीयमाह्निकम्॥ ०॥

समाप्तश्चाध्यायः॥ २॥

भजनीयोत्तमत्वेन भक्तेरुत्तमता यतः।
भक्तसद्भावतस्तच्च भजनीयो निरूप्यते॥ १॥

भजनीयेनाद्वितीयमिदं कृत्स्नस्य तत्स्वरूपत्वात्॥ ८५॥

ज्ञानाधीना श्रेयसिद्धिरिति तन्त्रेषु निर्णयः।
ज्ञानं सत्ता न वा जातिर्व्याप्यादौ तदसत्त्वतः॥ १॥
सत्त्वे वा नेदृशज्ञानकल्पनागौरवादपि।
तस्माज्ज्ञानं परं ब्रह्म सर्वत्रानुगतं यतः॥ २॥
तद्भेदो दृश्यमाने दृश्यभेदस्तु सत्वरे।
घटो ज्ञानमितीदृक् स्यात् प्रत्ययः सचित्रेतिचेत्॥ ३॥

अपि स्वरूपधीर्नैव सत्यत्वेनानुपस्थितेः ।
तदुपादानविषये ज्ञानेच्छाकृतिहेतुना ॥ ४ ॥
तासां स्वविषयत्वेन हेतुत्वे लाघवं भवेत् ।
यत् तत् स्वविषयं ब्रह्म गुणवत्त्वेव गौरवात् ॥ ५ ॥
कालवैशेषोपाधिकृतता तस्याहत्वादिकल्पना ॥ ८५ ॥

तच्छक्तिर्माया जडसामान्यात् ॥ ८६ ॥

तस्य ब्रह्मण ऐश्वर्यशक्तिर्मायेति गीयते (गी० अ० ७।श्लो०१४)

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १ ॥
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्त्तते ॥ २ ॥
तन्मायात्वं तु कार्याणां वैचित्र्याज्ञानतत्त्वतः ।
कार्यसत्त्वोपपत्त्यर्थं ब्रह्मसत्ताश्रुतेरिति ॥ १ ॥
मिथ्यात्वस्यानुषक्तेस्तु तन्मिथ्यात्वं न साम्प्रतम् ।
तत्त्वज्ञानेन बाध्यत्वं मिथ्यात्वमिति चेन्नहि ॥ २ ॥
मिथ्यात्वस्याप्यतथ्यत्वात् सत्यत्वं सुतरां स्थितम् ।
मिथ्यात्वस्य च सत्यत्वे दृश्यसत्यत्वमागतम् ॥ ३ ॥
अलीकानामभानाच्च भासत्वं तु सदेव तत् ।
रज्जौ सर्पादिभानं यदन्यथाख्यातिरेव सा ॥ ४ ॥
अन्यस्य सदसत्त्वाभ्यां बाधाबाधव्यवस्थितेः ।
सा माया अवस्थामात्रं ज्ञेयत्वं नित्यमेव तत् ॥ ५ ॥
अन्यथा तु स्वतन्त्रा स्यात् तस्याऽविद्याऽनित्यता ॥ ८६ ॥

## व्यापकत्वाद्युपादानम् ॥ ८७ ॥

एवं व्यापकतत्त्वेभ्यो व्याप्यतत्त्वसमुद्भवः ।
व्यापकानां हि तादात्म्याद्युपादानता मता ॥ १ ॥
न तावत् समवायेन भेदस्यानङ्गीकरणात् ।
शब्दानां समयोऽप्येवं शक्त्युपाधिकया वपुः ॥ २ ॥
सत्त्वेन सर्वकार्येषु कारणत्वं परेशितुः ।
निमित्तत्वं हि तद्बुद्धेर्बाह्येष्वनुगततः ॥ ३ ॥
बुद्धेस्तु साक्षिभावाख्या सबोध्यत्वं ततो भिदः ।
योग्यात्मा बुद्धितत्त्वव्यभिचारेऽपि सम्भवेत् ॥ ४ ॥
सुप्तोत्थितस्य प्रथमाद्बुद्धेः प्रथमसम्भवः ।
कार्यकारणभावादि बुद्ध्वा निर्माति स प्रभुः ॥ ५ ॥
स्वतो निर्विषयाप्येषा चैतन्योपाधिभावतः ।
तैलादिवत् प्रदीपस्था सप्रकाशप्रकाशिनी ॥ ६ ॥
(छां०।पृ०१८८)

करिष्यामीतिसङ्कल्पादहङ्कारोद्भवस्ततः ।
स ऐक्षत बहुस्यामित्येवमादिश्रुतिस्मृतेः ॥ ७ ॥
बुद्धेर्विकारेष्विच्छादावनुगमादहंकृतेः ।
व्याप्यैकतत्त्वं तत्त्वे तु बुद्धेर्व्यापकभावनात् ॥ ८ ॥
ईशोऽहं ज्ञातिसम्बन्धात् तथैवास्यादहंकृतेः ।
मायाभूतेन्द्रियादीनामहङ्कारोऽपि कारणम् ॥ ९ ॥
तत्र शब्दस्पर्शरूपरसगन्धत्वसंश्रया ।
सामान्यान्येव शब्दादिभूतानां चापि हेतवः ॥ १० ॥

सर्व्वत्र यह एव स्यात् तत्त्वानामिति चेदतः।
विकारग्रहणे जातिग्रहवत् तद्ग्रहस्थितेः॥ ११॥
एवं व्यापकतत्त्वानां व्याप्येष्वनुगमः क्रमात्।
ब्रह्मादिसर्वतत्त्वानां घटोपादानता स्फुटम्॥ १२॥
न कर्मणान्यथासिद्धिरिह तत्त्वस्य युज्यते।
तादात्म्यादन्यथासिद्धेरतादात्म्यप्रयोजकम्॥ १३॥
एवं कारणतत्त्वानां मोक्षोपायतया पुनः।
निर्मितिः प्राणिबुद्ध्यादेरतादात्म्यात् पृथक् पृथक्॥ १४॥
आसर्गप्रलयादीनां बुद्धिर्नास्ति न यत् क्वचित्।
सुषुप्तौ जीवबुद्धीनां लयोऽनन्तः स मोक्षणे॥ १५॥ ८७॥
अथानीश्वरसांख्यानां बुद्धेः सर्गो न युज्यते।
क्रमादिनिगमाभावादित्येतत् सूत्रमुच्यते॥ १॥

न प्राणिबुद्धिभ्योऽसम्भवात्॥ ८८॥

क्रमाद्देवर्षिसर्गादिः श्रूयते कस्य बुद्धितः।
सम्भवाद्भूतसर्गोऽयं तस्मादीशोऽस्ति बुद्धिमान्॥ ८८॥

निर्मायोच्चावचं श्रुतीश्च निर्मिमीते पितृवत्॥ ८९॥

उच्चावचानि भूतानि धर्माधर्मानुसारतः।
निर्माय निर्मिमीतेऽसौ वेदांस्तद्धितकाम्यया॥ १॥
यथा पितोत्पाद्य पुत्रानज्ञातौ ज्ञापयत्यपि।
हिताहितपरीहारौ वाक्यैस्तद्वदयं प्रभुः॥ २॥ ८९॥

पर्यग्निकरणेनाग्निर्गावश्च श्रुत्येव दर्शिताः॥ ११॥

(मनु सं०।अ०३।श्लो०६८)

पञ्चसूना गृहस्थानामिति स्मृतिषु चोदितम्।

न सामान्यविशेषाभ्यां शूद्रे सुतरां यथा॥ १२॥

(विष्णुपु०।अं०३।अ०६।श्लो०१८।१९)

रक्षोपजीवी पशुहा नरकं शरणं व्रजेत्॥ ९०॥

श्रुतिप्रसक्तापूर्त्तानामपूर्वमथ चिन्त्यते।

कर्त्तृभोक्तृगतं तत् किमथवा परमेश्वरे॥ १॥

फलमस्माद्बादरायणो दृष्टत्वात्॥ ९१॥

(उत्तरमीमांसा०।अ०१।पा०१।सू०२)

रागादिरोषतोषाभ्यां दृष्टत्वात् कर्मणां फलम्।

अस्माद्ब्रह्म एवाह भगवान् बादरायणः॥ १॥

तत्र कर्त्तृगतं पुत्रे जातेष्टिफलदर्शनात्।

अथ भोक्तृगतो भोगः कस्मिन्नित्येव चिन्त्यते॥ २॥

अन्योन्याश्रय एव स्यादुभयोः स्वव्यपेक्षणात्।

तस्माद्दृष्टतया रोषतोषाभ्यां परमेश्वितुः॥ ३॥

चिताचितफलप्राप्तिः फलोद्देश्यगता भवेत्।

नाप्युद्देश्यगतत्वेन व्यापारान्तरकल्पनम्॥ ४॥

अन्यथा राजसेवादावपूर्वं प्रसज्यते।

अत एवेश्वरप्रीतिप्रदत्वं कर्मणां श्रुतम्॥ ५॥

(गी०।अ०१२।श्लो०२०)

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥ १॥
रोषतोषादिसत्त्वेऽपि न संसारित्वमीशितुः।
तद्वृत्तत्वाद्दुःखत्वान्नित्यमुक्ततयापि च॥ ६॥ ९१॥

व्युत्क्रमादप्ययस्तथा दृष्टम्॥ ९२॥

प्रलयो व्याप्यतत्त्वानां व्यापकेषूत्क्रमान्मतः।
व्यापिकायां मृदि व्याप्यघटादिलयदर्शनात्॥ १॥९२॥

इत्याचार्यश्रीस्वप्नेश्वरविद्वद्विरचिते शाण्डिल्यशतसूत्रीये भाष्ये तृतीयाध्यायस्य प्रथममाह्निकम्॥ १॥

जीवस्य ब्रह्मभावो हि मुक्तिरित्यभिधीयते।
तद्विवेकतयाचापि भजनीयविवेचनम्॥ १॥
अन्यस्य कथमन्यत्वं घटेतेति वितर्कयन्।
जीवानां भगवद्भावे योग्यतामाह सूत्रकृत्॥ २॥

तदैक्यं नानात्वैकत्वमुपाधियोगहानादादित्यवत्॥ ९३॥

(छां०।प्र०२००) सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचन (गी०।अ०१३।श्लो०१३।२४)।

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥ १॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।

इत्यादिभिरस्यैकत्वमेव स्वभावः। तत्रयथा चाकाशस्यच:

स जीवोपाधिबुद्धिरागानुगतः। तथाच श्रुतिः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्। (विष्णुपु० अं० २। अ० १६। श्लो०-१२)।

सितनीलादिभेदेन यथैकं दृश्यते नभः।
भ्रान्तदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक्॥ १॥

इति। ततः परमात्मा जीवोपाधिबुद्धिहाने सति पुनरेकत्वमप्यविरुद्धं यथादित्यस्य प्रकाशात्मनः प्रतिबिम्बोपाधिदर्पणाद्यपगमे तद्वत्॥ ८३॥

पृथगिति चेन्न परेणासम्बन्धात् प्रकाशानाम्॥ ८४॥

पृथगेव परस्परमत्यन्तभिन्नाः प्रकाशात्मान एव जीवाः अन्यथा कश्चिन्मुक्तः कश्चिद्बद्ध इति व्यवस्था न स्यादिति चेन्न कथंचिदनीश्वरसाङ्ख्यानां तथा सत्त्वेऽपि सेश्वरसाङ्ख्यानां तदसंभवात्। कथम्। प्रकाशात्मनां परेण परमेश्वरेण द्रष्टृत्वदृश्यत्वलक्षणसम्बन्धाभावात् तेषां स्वप्रकाशतयादित्येनेव प्रदीपानामप्रकाशनात्। तथाचानीश्वरत्वमसर्वज्ञत्वं ज्ञेयत्वं च प्रसङ्गः स्यात्। अथ प्रकाशास्तेषां आत्मप्रकाशा अपि मिथोबुद्धिद्वारा प्रकाश्यत्वम्। तद्धि तमोऽभिभूतस्यैव नैषामन्तःकरणवत्त्वात्। अथ तद्योग्यत्वे तत् स्यादिति। न सत्यावरणनिवृत्तावपि दीपो दीपान्तरप्रकाश्य इति बाह्याभ्यन्तरप्रकाशयोः कश्चिदौपाधिकोऽप्येकधर्मो येन (बृहदा०। ४। ७। ५) अयं ज्योतिरेकाकं पुरुष इत्यादौ नैको ज्योतिःशब्दः। तथा-

इति श्रुतम्। तथा (नृसिंहपु०।अ०।श्लो०) मल्लोकमध्ये पुरुषे पुराणे मुक्तौ किमर्थं क्रियते न यत्न इति। तस्मात् परभक्तिमात्रेण बुद्धेरस्तमयने सति ब्रह्मानन्दावाप्तिलक्षणा मुक्तिरित्यर्थः। तथा च तदीयबुद्धिविलयप्रागभावप्रध्वंसनिमित्तकब्रह्मानन्दावाप्तिर्मुक्तिरिति तल्लक्षणं सूचितम्। अथ ब्रह्मानन्दावाप्तेः चिद्रूपत्वेनापुरुषार्थत्वमिति चेन्न ग्रामादिवदभिष्टतया पुमर्थत्वात्। न च बुद्धिर्जीवोपाधिर्मता भगवत एव बुद्धिमत्त्वाभ्युपगमात्। अन्यथा इदं सुखमथ सुखत्वमिति ज्ञानाख्यातेर्नित्यतया तद्विशिष्टस्य पुमर्थाभावप्रसङ्गात् इच्छाकृत्योर्विकल्पकत्वाभावात्। तस्मादविद्योपरागेण विद्धे अपीच्छाकृती इति। कृत्यसाध्यत्वज्ञानं प्रतिबन्धकमिति चेत् भोगादौ बलवदनिष्टानुबन्धित्वतिरोधानादिवोत्कटरागेण कृत्यसाध्यत्वमपि तिरोधाय प्रवर्त्तितमिति किमनुपपन्नम्। आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमित्यागमादपि तथात्वमध्यवसेयमिति ॥ ९६ ॥

अथ परभक्तिसिद्धौ जीवनादृष्टभोगवदितरेषामपूर्वाणामपि भोगेनैव क्षय इत्यनिर्मोक्ष एव स्यादित्यत उच्यते।

आयुश्चिरमितरेषां तु हानिरनास्पदत्वात् ॥ ९७ ॥

आत्मरतौ सत्यां (छां०।प्र०६।०) तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति। तथा (विष्णुपु०।अं०१।अ०२०।श्लो०२०)

धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि ॥ १ ॥

तथाच यावज्जीवनादृष्टं तावत्कालमेव चिरं परमतौ तस्या-मपि मुक्तिप्रतिबन्धकं तावदेव जीवन्मुक्तिः। इतरेषां धर्मा-धर्माणां जीवनादृष्टत्वे सति बुद्धेरत्यन्तत्वे भोगाप्रदत्वाभा-वाद्बुद्धिभोगाभाव एवेति नाभिर्जीव इति बुद्धेरपि विकार्यत्वेन कारणत्वात्। नापि तददृष्टहेतुत्वं कारणान्तराभावे फला-निष्पत्तावपि हेतुत्वापत्तेः। तत्र भगवत्तोषरोषरूपस्यापि लयः कालात् प्रत्ययसामग्रीतो वा यथाप्राक्पूर्वाणामप्रवैगुण्याद-जनितपरमापूर्वाणां लय इति। मत्त्वार्पणं तु प्रतिबन्धकीभू-तकर्मणामबन्धायेति सर्वमनवद्यम्। परंपरयैव ज्ञानाग्निना कर्मक्षय इति ॥ ९७ ॥

संसृतिरेषामभक्तिः स्यान्नाज्ञानात् कारणासिद्धेः ॥ ९८ ॥

यत्र जीवस्य संसारः किमज्ञानकृतो मतः।
उताभक्तिकृतस्तत्र पक्षमेतत् प्रवर्त्तते ॥ १ ॥
सर्वोऽस्य जीवन्मुक्तत्वं मुक्तिरेषां परा गतिः।
जीवन्मुक्तिः परा भक्तिस्तद्विहीनस्य संसृतिः ॥ २ ॥
सापि भक्तेः कामनानामभावादेव तिष्ठति।
भक्तौ यस्यां निवर्त्तेत तथाचोक्तं महर्षिभिः ॥ ३ ॥

(विष्णुपु०।अं०१।अ०९।श्लो०५९)।

तावदार्त्तिस्तथा वाञ्छा तावन्मोहस्तथा सुखम्।
यावन्नयाति शरणं त्वामशेषाघनाशनम् ॥ १ ॥
तत्त्वाज्ञानकृता सृष्टिर्ज्ञानात्तु निरिष्यते।
रज्जुसर्पादिवद्भानामभावात् तदसम्भवात् ॥ ४ ॥

लक्षणानिवृत्तेः। नचाविर्भावस्याविर्भावान्तरापेक्षकत्वेऽनवस्थाऽनो-रवयोरन्यतरप्रसङ्गः घटसामग्र्या एवाविर्भावस्याविर्भावत्वात्। अन्यथा कपालसत्त्वादावपि तथात्वप्रसङ्गात्। एवञ्च घटस्य पूर्वपूर्वाविर्भावतिरोभावपरंपरैव प्रागभावस्तिरोभावश्च नाशः स च कदाचिदात्यन्तिकोऽपि यथा देवदत्तशरीरस्य यथा वा मुक्तपुरुषादीनाम्। अन्योन्यात्यन्ताभावौ च परस्परविरुद्धधर्मतदधिकरणयोर्नातिरिच्येते। अन्यथा भावेऽप्यभावान्तरस्वीकारप्रसङ्गादिति। प्रलये तु प्रलयाख्यविकारातिरिक्तस्य विकारस्याभाव एव। संस्कारास्तु सूक्ष्मात्मना तिष्ठन्तीति न कोऽपि दोषः। पर्यवसिता चेयमपि भक्तिमीमांसा॥

परिवीतपीतवसनं घनोपमम्।
शतपत्रपत्रसदृशायतेक्षणम्॥
धृतवेणुरेणुपरमण्डितं गवाम्॥
हृदि वोऽस्तु कौस्तुभविभूषणं महः॥१॥
गौडक्ष्मावलये विशारद इति ख्यातादभूद्भूमणेः।
सर्वोर्वीपतिसार्वभौमपदभाक् प्रज्ञावतामग्रणीः॥
तस्मादास जलेश्वरो बुधवरः सेनाधिपः स्वाम्यताम्।
स्वप्नेशेन कृतं तदङ्गजनुषा सद्भक्तिमीमांसनम्॥२॥

इति श्रीस्वप्नेश्वरविद्वद्विरचिते शाण्डिल्यशतसूत्रीये भाष्ये द्वितीयाध्यायस्य द्वितीयमाह्निकं समाप्तश्चाऽध्यायः॥२॥

समाप्तेयं भक्तिमीमांसा॥

---